॥ शरणागति दीपिका ॥

श्रीः ॥

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥

पद्मापतेः स्तुतिपदेन विपच्यमानं
पश्यन्त्विह प्रपदनप्रवणा महान्तः ।
मद्वाक्य संवलितमप्यजहत्स्वभावं
मान्यं यतीश्वरमहानससम्प्रदायम् ॥ १॥

नित्यं श्रिया वसुधया च निषेव्यमाणं
निर्व्याजनिर्भरदयाभरितं विभाति ।
वेदान्तवेद्यमिह वेगवती समीपे
दीपप्रकाश इति दैवतमद्वितीयम् ॥ २॥

दीपस्त्वमेव जगतां दयिता रुचिस्ते
दीर्घं तमः प्रतिनिवर्त्यमिदं युवाभ्याम्।
स्तव्यं स्तवप्रियमतः शरणोक्तिवश्यं var स्तवप्रियतमं
स्तोतुं भवन्तमभिलष्यति जन्तुरेषः ॥ ३॥ var भवन्तमिह वाञ्छति,
भवन्तमभिवाञ्छति

पद्माकरादुपगता परिषस्वजे त्वां
वेगा सरिद्विहरणा कलशाब्धिकन्या ।
आहुस्तदाप्रभृति दीपसमावभासं
आजानतो मरकतप्रतिमं वपुस्ते ॥ ४॥

स्वामिन् गभीरसुभगं श्रमहारि पुंसां
माधुर्यरम्यमनघं मणिभङ्गदृश्यम् ।
वेगान्तरे वितनुते प्रतिबिम्बशोभां var वेगान्तरेऽपि तनुते
लक्ष्मी सरः सरसिजाश्रयमङ्गकं ते ॥ ५॥

आविश्य धारयसि विश्वममुष्य यन्ता
शेषी श्रियःपतिरशेषतनुर्निदानम् ।
इत्यादि लक्षणगणैः पुरुषोत्तमं त्वां
जानाति यो जगति सर्वविदेष गीतः ॥ ६॥

विश्वं शुभाश्रयवदीश वपुस्त्वदीयं
सर्वा गिरस्त्वयि पतन्ति ततोऽसि सर्वः ।
सर्वं च वेदविधयस्त्वदनुग्रहार्थाः
सर्वाधिकस्त्वमिति तत्त्वविदस्तदाहुः ॥ ७॥

ज्ञानं बलं नियमनक्षमताऽथ वीर्यं
शक्तिश्च तेज इति ते गुणषट्कमाद्यम् ।
सर्वातिशायिनि हिमोपवनेश यस्मिन्
अन्तर्गतो जगदिव त्वयि सद्गुणौघः ॥ ८॥

दीपावभासदयया विधिपूर्वमेतत्
विश्वं विधाय निगमानपि दत्तवन्तम् ।
शिष्यायिताः शरणयन्ति मुमुक्षवस्त्वां
आद्यं गुरुं गुरुपरम्परयाऽधिगम्यम् ॥ ९॥ var गुरुपरम्परयाऽभिगम्यम्

सत्ता स्थिति प्रयतनप्रमुखैरुपात्तम्
स्वार्थं सदैव भवता स्वयमेव विश्वम् ।
दीपप्रकाश तदिह त्वदवाप्तये त्वां
अव्याजसिद्धमनपायमुपायमाहुः ॥ १०॥

भोग्यं मुकुन्द गुणभेदमचेतनेषु
भोक्तृत्वमात्मनि निवेश्य निजेच्छयैव । var भोक्तृत्वमात्मसु
पाञ्चालिकाशुकविभूषणभोगदायी
var पाञ्चालिकांशुकविभीषण, पाञ्चालिकांशुकविभूषण
सम्राडिवात्मसमया सह मोदसे त्वम् ॥ ११॥

त्वां मातरं च पितरं सहजं निवासं
सन्तः समेत्य शरणं सुहृदं गतिं च ।
निःसीमनित्यनिरवद्यसुखप्रकाशं
दीपप्रकाशसविभूतिगुणं विशन्ति ॥ १२॥

जन्तोरमुष्य जनने विधि शम्भु दृष्टौ
रागादिनेव रजसा तमसा च योगः ।
द्वैपायनप्रभृतयस्त्वदवेक्षितानां
सत्त्वं विमुक्ति नियतं भवतीत्युशन्ति॥ १३॥

कर्मस्वनादि विषमेषु समो दयालुः
स्वेनैव क्लृप्तमपदेशमवेक्षमाणः । var क्लृप्तमुपदेशमपेक्षमाणः

स्वप्राप्तये तनुभृतां त्वरसे मुकुन्द
स्वाभाविकं तव सुहृत्त्वमिदं गृणन्ति ॥ १४॥

निद्रायितान् निगमवर्त्मनि चारुदर्शी var चोरदर्शी, पारदर्शी
प्रस्थानशक्तिसहितान् प्रतिबोध्य जन्तून् । var रहितान्
जीर्ण स्तनन्धयजडान्धमुखानिवास्मान् var मुखानिवान्यान्
नेतुं मुकुन्द यतसे दयया सह त्वम् ॥ १५॥ var सहत्वम्

भक्तिः प्रपत्तिरथवा भगवंस्तदुक्तिः
तन्निष्ठ संश्रय इतीव विकल्प्यमानम् ।
यं कंचिदेकमुपपादयता त्वयैव var यत्किंचित्
त्रातास्तरन्त्यवसरे भविनो भवाब्धिम् ॥ १६॥

नानाविधैरकपटैरजहत्स्वभावैः
अप्राकृतैर्निजविहारवशेन सिद्धैः ।
आत्मीयरक्षणविपक्षविनाशनार्थैः var विनाशनार्हैः
संस्थापयस्यनघ जन्मभिराद्यधर्मम् ॥ १७॥

निम्नोन्नतानि निखिलानि पदानि गाढं
मज्जन्ति ते महिम सागरशीकरेषु ।
नीरन्ध्रमाश्रयसि नीचजनांस्तथापि
शीलेन हन्त शिशिरोपवनेश्वर त्वम् ॥ १८॥

काशीवृकान्धकशरासनबाणगङ्गा-
संभूतिनामकृतिसंवदनाद्युदन्तैः । var संवननाद्युदन्तैः
स्वोक्त्यम्बरीष भयशापमुखैश्च शम्भुं
तन्निघ्नमीक्षितवतामिह कः शरण्यः ॥ १९॥

क्वासौ विभुः क्व वयमित्युपसत्ति भीतान्
जन्तून् क्षणात् त्वदनुवृत्तिषु योग्ययन्ती । var त्वदनुभूतिषु
संप्राप्तसद्गुरुतनोः समये दयालोः
आत्मावधिर्भवति शिक्षितधीः क्षणं ते ॥ २०॥ var संस्कृतधीः, संस्कृतिरीक्षणं ते

योग्यं यमैश्च नियमैश्च विधाय चित्तं
सन्तो जितासनतया स्ववशासु वर्गाः ।
प्रत्याहृतेन्द्रियगणाः स्थिरधारणास्त्वां
ध्यात्वा समाधियुगलेन विलोकयन्ति ॥ २१॥

पद्माभिरामवदनेक्षणपाणिपादं
दिव्यायुधाभरणमाल्य् विलेपनं त्वाम् ।
योगेन नाथ शुभमाश्रयमात्मवन्तः
सालम्बनेन परिचिन्त्य न यान्ति तृप्तिम् ॥ २२॥ var शान्तिं

मानातिलङ्घि सुखबोधमहाम्बुराशौ
मग्नास्त्रिसीमरहिते भवतः स्वरूपे ।
तापत्रयेण विहतिं न भजन्ति भूयः var सन्तः
संसारघर्मजनितेन समाधिमन्तः ॥ २३॥

धीसंस्कृतान् विदधतामिह कर्मभेदान्
शुद्धं जिते मनसि चिन्तयतां स्वमेकम् ।
त्वत्कर्मसक्तमनसामपि चापरेषां
सूते फलान्यभिमतानि भवान् प्रसन्नः ॥ २४॥

उद्बाहुभावमपहाय यथैव खर्वः
प्रांशु फलार्थमभियाचति योगिचिन्त्य ।
var प्रांशु फलं समभियाचति
एवं सुदुष्करमुपायगणं विहाय
स्थाने निवेशयति तस्य विचक्षणस्त्वाम् ॥ २५॥ var विचक्षणं

नित्यालसार्हमभयं निरपेक्षमन्यैः
विश्वाधिकारमखिलाभिमतप्रसूतिम् ।
शिक्षाविशेषसुभगं व्यवसाय सिद्धाः var सुलभं
सत्कुर्वते त्वयि मुकुन्द षडङ्गयोगम् ॥ २६॥

त्वत्प्रातिकूल्यविमुखाः स्फुरदानुकूल्याः
कृत्वा पुनः कृपणतां विगतातिशङ्काः ।
स्वामिन् भव स्वयमुपाय इतीरयन्तः
त्वय्यर्पयन्ति निजभारमपारशक्तौ ॥ २७॥

अर्थान्तरेषु विमुखान् अधिकारहानेः
श्रद्धाधिकांस्त्वदनुभूति विलम्बभीतान् । var श्रद्धाधनात्
दीप प्रकाश लभसे सुचिरात् कृतीव var कृती त्वं
न्यस्तात्मनस्तव पदे निभृतान् प्रपन्नान् ॥२८॥

मन्त्रैरनुश्रवमुखेष्वधिगम्यमानैः var अनुगम्यमानैः
स्वाध् क्रियासमुचितैर्यदिवाऽन्यवाक्यैः।

नाथ त्वदीय चरणौ शरणं गतानां
नैवायुतायुतकलाप्यऽपरैरवाप्या ॥ २९॥

दत्ताः प्रजा जनकवत् तव देशिकेन्द्रैः
पत्याऽभिनन्द्य भवता परिणीयमानाः ।
मध्ये सतां महितभोगविशेषसिद्ध्यै
माङ्गल्यसूत्रमिव बिभ्रति किङ्करत्वम् ॥ ३०॥  var  मङ्गल्यसूत्रमिव

दिव्ये पदे नियतकिङ्करताधिराज्यं
दातुं त्वदीय दयया विहिताभिषेकाः ।
var  प्राप्तुं त्वयैव, दातुं त्वयैव
आदेहपातमनघाः परिचर्यया ते
युञ्जानचिन्त्य युवराजपदं भजन्ति ॥ ३१॥

त्वां पाञ्चरात्रिकनयेन पृथग्विधेन
वैखानसेन च पथा नियताधिकराः ।
संज्ञाविशेषनियमेन समर्चयन्तः
प्रीत्या नयन्ति फलवन्ति दिनानि धन्याः ॥ ३२॥

वर्णाश्रमादिनियतक्रमसूत्रबद्धाः
var  वर्णाश्रमादिनियमस्थिरसूत्रबन्धा
भक्त्या यथार्ह विनिवेशितपत्रपुष्पा ।
मालेव कालविहिता हृदयङ्गमा त्वां
आमोदयत्यनुपरागधियां सपर्या ॥ ३३॥

ब्रह्मा गिरीश इतरेऽप्यमरा य एते
निर्धूय तान् निरयतुल्यफलप्रसूतीन् ।
प्राप्तुं तवैव पदपद्मयुगं प्रतीताः
पातिव्रतीं त्वयि वहन्ति परावरज्ञाः ॥ ३४॥   var  भजन्ति

नाथ त्वदिष्टविनियोगविशेषसिद्धं
शेषत्वसारमनपेक्ष्य निजं गुणज्ञाः ।  var   शेषत्वसारमनुपेक्ष्य
भक्तेषु ते वरगुणार्णव पारतन्त्र्यात्
दास्यं भजन्ति विपणिव्यवहारयोग्यम् ॥ ३५॥

सद्भिस्त्वदेकशरणैर्नियतं सनाथाः  var  नियताः
सर्पादिवत् त्वदपराधिषु दूरयाताः ।
धीरास्तृणीकृतविरिञ्चपुरन्दराद्याः

कालं क्षिपन्ति भगवन् करणैरवन्ध्यैः॥ ३६॥

वागादिकं मनसि तत् पवने स जीवे
भूतेष्वयं पुनरसौ त्वयि तैः समेति ।
साधारणोत्क्रमणकर्मसमाश्रितानां
यन्त्रा मुकुन्द भवतैव यथा यमादेः ॥ ३७॥

सव्यान्ययोरयनयोर्निशि वासरे वा
सङ्कल्पितायुरवधीन् सपदि प्रपन्नान् ।
हार्दः स्वयं निजपदे विनिवेशयिष्यन्
नाडीं प्रवेशयसि नाथ शताधिकां त्वम् ॥३८॥

अर्चिर्दिनं विशदपक्ष उदक्प्रयाणं
संवत्सरो मरुदशीतकरः शशाङ्कः ।
सौदामनी जलपतिर्वलजित्प्रजेशः
इत्यातिवाहिक् सखो नयसि स्वकीयान् ॥ ३९॥

त्वच्छेषवृत्त्यनुगुणैर्महितैर्गुणौघैः var सहिते गुणौघैः, सहितैर्गुणौघैः
आविर्भवत्ययुतसिद्ध निजस्वरूपे ।
त्वल्लक्षणेषु नियतेष्वपि भोगमात्रे
साम्यं भजन्ति परमं भवता विमुक्ताः ॥ ४०॥

इत्थं त्वदेकशरणैरनघैरवाप्ये
त्वत्किङ्करत्वविभवे स्पृहयाऽपराध्यन् ।
आत्मा ममेति भगवन् भवतैव गीता var (to next line) गीतान् प्राचो निरीक्ष्य, गीताः
प्रायो निरीक्ष्य
वाचो निरीक्ष्य भरणीय इह त्वयाऽहम् ॥ ४१॥ var इति

पद्मा मह् प्रभृतिभिः परिभुक्तभूम्नः
का हानिरत्र मयि भोक्तरि ते भवित्री ।
दुष्येत् किमङ्घ्रितटिनी तव देव सेव्या
दुर्वारतर्षचपलेन शुनाऽवलीढा ॥ ४२॥

सत्वानि नाथ विविधान्यभिसञ्जिघृक्षोः var विविधान्यपि सञ्जिघृक्षोः
संसारनाट्यरसिकस्य तवाऽस्तु तृप्त्यै ।
प्रत्यक्पराङ्मुखमतेरसमीक्ष्य कर्तुः
प्राचीनसज्जनविडम्बनभूमिका मे ॥ ४३॥

कर्तव्यमित्यनुकलं कलयाम्यकृत्यं
स्वामिन्नकृत्यमिति कृत्यमपि त्यजामि । var स्वामिन्नकृत्यमिव
अन्यद्व्यतिक्रमणजातमनन्तमर्थ-
स्थाने दया भवतु ते मयि सार्वभौमी ॥ ४४॥ var वहतु

यं पूर्वमाश्रितजनेषु भवान् यथावत्
धर्मं परं प्रणिजगौ स्वयमानृशंस्यम् ।
संस्मारितस्त्वमसि तस्य शरण्यभावात्
नाथ त्वदात्तसमया ननु मादृशार्थम् ॥ ४५॥

त्राणं भवेति सकृदुक्तिसमुद्यतानां
तैस्तैरसह्यवृजिनैरुदरंभरिस्ते ।
सत्यापिता शतमखात्मजशङ्करादौ
नाथ क्षमा न खलु जन्तुषु मद्विवर्जम् ॥ ४६॥

कर्मादिषु त्रिषु कथां कथमप्यजानन् var कथमित्यजानन्
कामादिमेदुरतया कलुषप्रवृत्तिः । var कामादिमांसलतया
साकेतसंभवचराचरजन्तुनीत्या var जन्तुरीत्या
वीक्ष्यः प्रभो विषयवासितयाऽप्यहं ते ॥ ४७॥

ब्रह्माण्डलक्षशतकोटिगणाननन्तान्
एकक्षणे विपरिवर्त्य विलज्जमानाम् ।
मत्पापराशिमथने मधुदर्पहन्त्रीं
शक्तिं नियुङ्क्ष्व शरणागतवत्सल त्वम् ॥ ४८॥

आस्तां प्रपत्तिरिह देशिकसाक्षिका मे var साक्षिकं
सिद्धा तदुक्तिरनघा त्वदपेक्षितार्था । var त्वदवेक्षितार्था
न्यस्तस्य पूर्वनिपुणैस्त्वयि नन्विदानीं
पूर्णे मुकुन्द पुनरुक्त उपाय एषः ॥ ४९॥ var पूर्णो

यद्वा मदर्थपरिचिन्तनया तवालं var तवाहं
संज्ञां प्रपन्न इति साहसिको बिभर्मि ।
एवं स्थिते त्वदपवादनिवृत्तये मां
पात्रीकुरुष्व भगवन् भवतः कृपायाः ॥ ५०॥ var पात्रं कुरुष्व

त्यागे गुणेशशरणागतसंज्ञिनो मे
स्त्यानागसोऽपि सहसैव परिग्रहे वा ।
किं नाम कुत्र भवतीति कृपादिभिस्ते

गूढं निरूपय गुणेतर तारतम्यम् ॥ ५१॥   var  विचारय

स्वामी दयाजलनिधिर्मधुरः क्षमावान्
शीलाधिकः श्रितवशः शुचिरत्युदारः ।
एतानि हातुमनघो न किलार्हसि त्वं
विख्यातिमन्ति बिरुदानि मया सहैव ॥ ५२॥  var  विख्यातधीरबिरुदानि

वेला धनञ्जयरथादिषु वाचिकैः स्वैः
आघोषितामखिलजन्तु शरण्यतां ते ।   var  अखिललोक
जानन् दशाननशताधिकागसोऽपि
पश्यामि दत्तमभयं स्वकृते त्वया मे ॥ ५३॥

रक्ष्यस्त्वया तव भरोऽस्म्यहमित्यपूर्वान्
वर्णानिमानहृदयानपि वाचयित्वा ।
मद्दोषनिर्जितगुणो महिषीसमक्षं
मा भूस्त्वदन्य इव मोघपरिश्रमस्त्वम् ॥ ५४॥  var  मा भूस्तदन्य

मुख्यं च यत्प्रपदनं स्वयमेव साध्यं
दातव्यमीश कृपया तदपि त्वयैव ।
तन्मे भवच्चरणसङ्गवतीमवस्थां
पश्यन्नुपायफलयोरुचितं विधेयाः ॥ ५५॥

अल्पास्थिरैरसुखजैरसुखावसानैः
दुःखान्वितैरनुचितैरभिमानमूलैः ।
प्रत्यक्परागनुभवैः परिघूर्णितं मां
त्वय्येव नाथ चरितार्थय निर्विविक्षुम् ॥ ५६॥  var  निर्व्यपेक्षं, निर्विपक्षं, निर्विवक्षन्

तत्त्वावबोधशमितप्रतिकूलवृत्तिं
कैङ्कर्यलब्धकरणत्रयसामरस्यम् ।
कृत्वा त्वदन्यविमुखं कृपया स्वयं मां
स्फातिं दृशोः प्रतिलभस्व जगज्जनन्याः ॥ ५७॥

इत्थं स्तुतिप्रभृतयो यदि संमता स्युः
यद्वापराधपदवीष्वभिसंविशन्ति ।  var  पदवीष्वपि संविशन्ति
स्तोकानुकूल्यकणिका वशवर्तिनस्ते
प्रीतिक्षमाप्रसरयोरहमस्मि लक्ष्यम् ॥ ५८॥

स्नेहोपपन्न विषयः स्वदशाविशेषात्

भूयस्तमिस्रशमनीं भुवि वेङ्कटेशः ।
दिव्यां स्तुतिं निरमिमीत सतां नियोगात्
दीपप्रकाशशरणागतिदीपिकाख्याम् ॥ ५९॥

The following additional shlOka is found in some publications.
(एतदनन्तरं □एतां दीपरका□□ इत्ययं श्लोकः केषुचिन्मुद्रितेषु
पुस्तकेषु दृश्यते ।
स तु न श्रीमदाचार्यानुगृहीत इति साम्प्रदायिकाः ।)

एतां दीपप्रकाशस्तुतिमिह रुचिरामित्थमब्यस्यमानः
सम्यक् दृष्ट्वा शरण्यप्रभृति निगतितं न्यासविद्याख्यतत्त्वम् ।
प्रत्यासीदद्विमुक्तानुभफलसमुद्भेदलब्द्ध्या कृतार्थः
प्राप्त पिण्डस्य भेदे परिणमति परब्रह्म सब्रह्मचारी ॥

॥इति श्रीशरणागति दीपिका समाप्ता॥

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥